५५ ॐ ऐं ह्रीं श्रीं सहस्त्रसूर्यसंयुक्तप्रकाशायै नमो नमः
५६ ॐ ऐं ह्रीं श्रीं रत्नचिन्तामणिगृहमध्यस्थायै नमो नमः
५७ ॐ ऐं ह्रीं श्रीं हानिवृद्धिगुणाधिक्यरहितायै नमो नमः
५८ ॐ ऐं ह्रीं श्रीं महापद्माटवीमध्यनिवासायै नमो नमः
५९ ॐ ऐं ह्रीं श्रीं जाग्रत्स्वप्नसुषुप्तीनां साक्षिभूत्यै नमो नमः
६० ॐ ऐं ह्रीं श्रीं महापापौघपापानां विनाशिन्यै नमो नमः
६१ ॐ ऐं ह्रीं श्रीं दुष्टभीतिमहाभीतिभञ्जनायै नमो नमः
६२ ॐ ऐं ह्रीं श्रीं समस्तदेवदनुजप्रेरिकायै नमो नमः
६३ ॐ ऐं ह्रीं श्रीं समस्तहृदयाम्भोजनिलयायै नमो नमः
६४ ॐ ऐं ह्रीं श्रीं अनाहतमहापद्ममन्दिरायै नमो नमः
६५ ॐ ऐं ह्रीं श्रीं सहस्त्रारसरोजातवासितायै नमो नमः
६६ ॐ ऐं ह्रीं श्रीं पुनरावृत्तिरहितपुरस्थायै नमो नमः
६७ ॐ ऐं ह्रीं श्रीं वाणीगायत्रीसावित्रीसन्नुतायै नमो नमः
६८ ॐ ऐं ह्रीं श्रीं रमाभूमिसुताराध्यपदाब्जायै नमो नमः
६९ ॐ ऐं ह्रीं श्रीं लोपामुद्रार्चितश्रीमच्चरणायै नमो नमः
७० ॐ ऐं ह्रीं श्रीं सहस्त्ररतिसौन्दर्यशरीरायै नमो नमः
७१ ॐ ऐं ह्रीं श्रीं भावनामात्रसन्तुष्टहृदयायै नमो नमः
७२ ॐ ऐं ह्रीं श्रीं सत्यसम्पूर्णविज्ञानसिद्धिदायै नमो नमः
७३ ॐ ऐं ह्रीं श्रीं त्रिलोचनकृतोल्लासफलदायै नमो नमः
७४ ॐ ऐं ह्रीं श्रीं श्रीसुधाब्धिमणिद्वीपमध्यगायै नमो नमः
७५ ॐ ऐं ह्रीं श्रीं दक्षाध्वरविनिर्भेदसाधनायै नमो नमः
७६ ॐ ऐं ह्रीं श्रीं श्रीनाथसोदरीभूतशोभितायै नमो नमः
७७ ॐ ऐं ह्रीं श्रीं चन्द्रशेखरभक्तार्तिभञ्जनायै नमो नमः
७८ ॐ ऐं ह्रीं श्रीं सर्वोपाधिविनिर्मुक्तचैतन्यायै नमो नमः
७९ ॐ ऐं ह्रीं श्रीं नामपारायणाभीष्टफलदायै नमो नमः
८० ॐ ऐं ह्रीं श्रीं सृष्टिस्थितितिरोधानसङ्कल्पायै नमो नमः
८१ ॐ ऐं ह्रीं श्रीं श्रीषोडशक्षरीमन्त्रमध्यगायै नमो नमः
८२ ॐ ऐं ह्रीं श्रीं अनाद्यन्तस्वयम्भूतदिव्यमूर्त्यै नमो नमः
८३ ॐ ऐं ह्रीं श्रीं भक्तहंसपरीमुख्यवियोगायै नमो नमः
८४ ॐ ऐं ह्रीं श्रीं मातृमण्डलसंयुक्तललितायै नमो नमः

८५ ॐ ऐं ह्रीं श्रीं भण्डदैत्यमहासत्वनाशनायै नमो नमः
८६ ॐ ऐं ह्रीं श्रीं क्रूरभण्डशिरच्छेदनिपुणायै नमो नमः
८७ ॐ ऐं ह्रीं श्रीं धाराच्युतसुराधीशसुखदायै नमो नमः
८८ ॐ ऐं ह्रीं श्रीं चण्डमुण्डनिशुम्भादिखण्डनायै नमो नमः
८९ ॐ ऐं ह्रीं श्रीं रक्ताक्षरक्तजिह्वादिशिक्षणायै नमो नमः
९० ॐ ऐं ह्रीं श्रीं महिषासुरदोर्वीर्यनिग्रहायै नमो नमः
९१ ॐ ऐं ह्रीं श्रीं अभ्रकेशमहोत्साहकारणायै नमो नमः
९२ ॐ ऐं ह्रीं श्रीं महेशयुक्तनटनतत्परायै नमो नमः
९३ ॐ ऐं ह्रीं श्रीं निजभर्तृमुखाम्भोजचिन्तनायै नमो नमः
९४ ॐ ऐं ह्रीं श्रीं वृषभध्वजविज्ञानभावनायै नमो नमः
९५ ॐ ऐं ह्रीं श्रीं जन्ममृत्युजरारोगभञ्जनायै नमो नमः
९६ ॐ ऐं ह्रीं श्रीं विधेयमुक्तविज्ञानसिद्धिदायै नमो नमः
९७ ॐ ऐं ह्रीं श्रीं कामक्रोधादिषड्वर्गनाशनायै नमो नमः
९८ ॐ ऐं ह्रीं श्रीं राजराजार्चितपदसरोजायै नमो नमः
९९ ॐ ऐं ह्रीं श्रीं सर्ववेदान्तसंसिद्धसुतत्त्वायै नमो नमः
१०० ॐ ऐं ह्रीं श्रीं श्रीवीरभक्तविज्ञाननिधानायै नमो नमः
१०१ ॐ ऐं ह्रीं श्रीं अशेषदुष्टदनुजसूदनायै नमो नमः
१०२ ॐ ऐं ह्रीं श्रीं साक्षाच्छ्रीदक्षिणामूर्तिमनोज्ञायै नमो नमः
१०३ ॐ ऐं ह्रीं श्रीं हयमेधाग्रसम्पूज्यमहिमायै नमो नमः
१०४ ॐ ऐं ह्रीं श्रीं दक्षप्रजापतिसुतावेषाढ्यायै नमो नमः
१०५ ॐ ऐं ह्रीं श्रीं सुमबाणेक्षुकोदण्डमण्डितायै नमो नमः
१०६ ॐ ऐं ह्रीं श्रीं नित्ययौवनमाङ्गल्यमङ्गलायै नमो नमः
१०७ ॐ ऐं ह्रीं श्रीं महादेवसमायुक्तशरीरायै नमो नमः
१०८ ॐ ऐं ह्रीं श्रीं महादेवरतौत्सुक्यमहादेव्यै नमो नमः

*॥ श्रीललिताष्टोत्तरशतनामावलिः सम्पूर्णा ॥*

॥ श्रीरस्तु ॥

॥ श्रीबालात्रिपुरसुन्दर्यै नमः ॥

## ॥ श्रीललितात्रिशतीस्तोत्ररत्नप्रारम्भः ॥

सकुङ्कुमविलेपनामलिकचुम्बिकस्तूरिकां
समन्दहसितेक्षणां सशरचापपाशाङ्कुशाम्।
अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां
जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम्॥

*अगस्त्य उवाच—*

हयग्रीव दयासिन्धो भगवन् भक्तवत्सल।
त्वत्तः श्रुतमशेषेण श्रोतव्यं यद्यदस्ति तत्॥ १॥
रहस्यनामसाहस्रमपि तत्संश्रुतं मया।
इतः परं च मे नास्ति श्रोतव्यमिति निश्चयः॥ २॥
तथापि मम चित्तस्य पर्याप्तिर्नैव जायते।
कार्तार्थ्यमप्राप्त इव शोचत्यात्मापि मे प्रभो॥ ३॥
किमिदं कारणं ब्रूहि ज्ञातव्यांशोऽपि वा पुनः।
अस्ति चेन्मामनुब्रूहि ब्रूहीत्युक्त्वा प्रणम्य तम्॥ ४॥

*सूत उवाच—*

समाललम्बे तत्पादयुगलं कलशोद्भवः।
हयाननो भीतभीतः किमिदं किमिदं त्विति॥ ५॥
मुञ्च मुञ्चेति तं चोक्त्वा चिन्ताक्रान्तो बभूव सः।
चिरं विचार्य निश्चिन्वन् वक्तव्यं न मयेत्यसौ॥ ६॥
तूष्णीं स्थितः स्मरन्नाज्ञां ललिताम्बाकृतां पुरा।
तं प्रणम्यैव स मुनिस्तत्पादावत्यजन् स्थितः॥ ७॥
वर्षत्रयावधि तथा गुरुशिष्यौ तथा स्थितौ।
तच्छृण्वन्तश्च पश्यन्तः सर्वलोकास्सुविस्मिताः॥ ८॥

तत्र श्रीललितादेवी कामेश्वरसमन्विता।
प्रादुर्भूता रहस्येवं हयग्रीवमवोचत॥ ९ ॥

श्रीदेव्युवाच—

अश्वाननावयोः प्रीतिश्शास्त्रविश्वासिने त्वयि।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी॥ १० ॥
स्वमातृयोनिवद्गोप्या विद्यैषेत्यागमा जगुः।
ततोऽतिगोपनीया मे सर्वपूर्तिकरी स्तुतिः॥ ११ ॥
मया कामेश्वरेणापि कृत्वा सा गोपिता भृशम्।
मदाज्ञया वचो देव्यश्चक्रुर्नामसहस्रकम्॥ १२ ॥
आवाभ्यां कथितो मुख्यः सर्वपूर्तिकरः स्तवः।
सर्वक्रियाणां वैकल्यपूर्तिर्यज्जपतो भवेत्॥ १३ ॥
सर्वपूर्तिकरं तस्मादिदं नाम कृतं मया।
तद्ब्रूहि त्वमगस्त्याय पात्रभूतो न संशयः॥ १४ ॥
पत्न्यस्य लोपामुद्राख्या मामुपास्तेऽतिभक्तितः।
अयं च नितरां भक्तस्तस्मादस्य वदस्व तत्॥ १५ ॥
अमुञ्चमानस्त्वत्पादौ वर्षत्रयमसौ स्थितः।
एतज्ज्ञातुमतो भक्त्या हीदमेव निदर्शनम्॥ १६ ॥
चित्तपर्याप्तिरेतस्य नान्यथा सम्भविष्यति।
सर्वपूर्तिकरं तस्मादनुज्ञातो मया वद॥ १७ ॥

सूत उवाच—

इत्युक्त्वान्तर्दधावम्बा कामेश्वरसमन्विता।
अथोत्थाप्य हयग्रीवः पाणिभ्यां कुम्भसम्भवम्॥ १८ ॥
संस्थाप्य निकटे वाचमुवाच भृशविस्मितः।

श्रीहयग्रीव उवाच—

कृतार्थोऽसि कृतार्थोऽसि कृतार्थोऽसि घटोद्भव॥ १९ ॥

त्वत्समो ललिताभक्तो नास्ति नास्ति जगत्त्रये।
येनागत्य स्वयं देवी तव वक्तव्यमन्वशात्॥ २०॥
सच्छिष्येण त्वयाहं च दृष्टवानस्मि तां शिवाम्।
यतन्ते यद्दर्शनाय ब्रह्मविष्ण्वीशपूर्वकाः॥ २१॥
अतः परं ते वक्ष्यामि सर्वपूर्तिकरं स्तवम्।
यस्य स्मरणमात्रेण पर्याप्तिस्ते भवेद् हृदि॥ २२॥
रहस्यनामसाहस्रादतिगुह्यतमं मुने।
आवश्यकं ततो ह्येतल्ललितां समुपासितुम्॥ २३॥
तदहं ते प्रवक्ष्यामि ललिताम्बानुशासनात्।
श्रीमत्पञ्चदशाक्षर्याः कादिवर्णक्रमान्मुने॥ २४॥
पृथग्विंशतिनामानि कथितानि घटोद्भव।
आहत्य नाम्नां त्रिशती सर्वसम्पूर्तिकारिणी॥ २५॥
रहस्यातिरहस्यैषा गोपनीया प्रयत्नतः।
तां शृणुष्व महाभाग सावधानेन चेतसा॥ २६॥
केवलं नामबुद्धिस्ते न कार्या तेषु कुम्भज।
मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मतापि च॥ २७॥
तस्मादेकाग्रमनसा श्रोतव्यं भवता मुने।

सूत उवाच—

इत्युक्त्वा तु हयग्रीवः प्रोचे नामशतत्रयम्॥ २८॥

इति पूर्वपीठिका

*अस्य श्री श्रीललितात्रिशतीस्तोत्रमालामन्त्रस्य भगवान् हयग्रीवऋषिः अनुष्टुप् छन्दः श्रीललितामहेश्वरी देवता ऐं ५ बीजं, सौः ४ शक्तिः, क्लीं ६ कीलकं, मम चतुर्विधफलपुरुषार्थसिद्ध्यर्थे जपे विनियोगः॥*

*(ऐमित्यादिभिरङ्गन्यासकरन्यासाः कार्याः)*

*ध्यानम्—*

अतिमधुरचापहस्तामपरिमितामोदबाणसौभाग्याम् ।
अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे ॥

*(लमित्यादिपञ्चपूजां कुर्यात्)*

ककाररूपा कल्याणी कल्याणगुणशालिनी।
कल्याणशैलनिलया कमनीया कलावती॥ १ ॥
कमलाक्षी कल्मषघ्नी करुणामृतसागरा।
कदम्बकाननावासा कदम्बकुसुमप्रिया॥ २ ॥
कन्दर्पविद्या कन्दर्पजनकापाङ्गवीक्षणा।
कर्पूरवीटीसौरभ्यकल्लोलितककुप्तटा ॥ ३ ॥
कलिदोषहरा कञ्जलोचना कम्रविग्रहा।
कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा॥ ४ ॥
एकाररूपा चैकाक्षर्येकानेकाक्षराकृतिः।
एतत्तदित्यनिर्देश्या चैकानन्दचिदाकृतिः॥ ५ ॥
एवमित्यागमाबोध्या चैकभक्तिमदर्चिता।
एकाग्रचित्तनिर्ध्याता चैषणारहितादृता॥ ६ ॥
एलासुगन्धिचिकुरा चैनःकूटविनाशिनी।
एकभोगा चैकरसा चैकैश्वर्यप्रदायिनी॥ ७ ॥
एकातपत्रसाम्राज्यप्रदा चैकान्तपूजिता।
एधमानप्रभा चैजदनेजज्जगदीश्वरी॥ ८ ॥
एकवीरादिसंसेव्या चैकप्राभवशालिनी।
ईकाररूपा चेशित्री चेप्सितार्थप्रदायिनी॥ ९ ॥
ईदृगित्यविनिर्देश्या चेश्वरत्वविधायिनी।
ईशानादिब्रह्ममयी चेशित्वाद्यष्टसिद्धिदा॥ १० ॥

ईक्षित्री क्षणसृष्टाण्डकोटिरीश्वरवल्लभा ।
ईडिता चेश्वरार्धाङ्गशरीरेशाधिदेवता ॥ ११ ॥
ईश्वरप्रेरणकरी चेशताण्डवसाक्षिणी ।
ईश्वरोत्सङ्गनिलया चेतिबाधाविनाशिनी ॥ १२ ॥
ईहाविरहिता चेशशक्तिरीषत्स्मितानना ।
लकाररूपा ललिता लक्ष्मीवाणीनिषेविता ॥ १३ ॥
लाकिनी ललनारूपा लसद्दाडिमपाटला ।
ललन्तिका लसत्फाला ललाटनयनार्चिता ॥ १४ ॥
लक्षणोज्ज्वलदिव्याङ्गी लक्षकोट्यण्डनायिका ।
लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः ॥ १५ ॥
ललामराजदलिकालम्बिमुक्तालताञ्चिता ।
लम्बोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता ॥ १६ ॥
ह्रीङ्काररूपा ह्रीङ्कारनिलया ह्रींपदप्रिया ।
ह्रीङ्कारबीजा ह्रीङ्कारमन्त्रा ह्रीङ्कारलक्षणा ॥ १७ ॥
ह्रीङ्कारजपसुप्रीता ह्रींमति ह्रींविभूषणा ।
ह्रींशीला ह्रींपदाराध्या ह्रींगर्भा ह्रींपदाभिधा ॥ १८ ॥
ह्रीङ्कारवाच्या ह्रीङ्कारपूज्या ह्रीङ्कारपीठिका ।
ह्रीङ्कारवेद्या ह्रीङ्कारचिन्त्या ह्रीं ह्रींशरीरिणी ॥ १९ ॥
हकाररूपा हलधृत्पूजिता हरिणेक्षणा ।
हरप्रिया हराराध्या हरिब्रह्मेन्द्रबन्दिता ॥ २० ॥
हयारूढासेवितांघ्रिर्हयमेधसमर्चिता ।
हर्यक्षवाहना हंसवाहना हतदानवा ॥ २१ ॥
हत्यादिपापशमनी हरिदश्वादिसेविता ।
हस्तिकुम्भोत्तुङ्गकुचा हस्तिकृत्तिप्रियाङ्गना ॥ २२ ॥
हरिद्राकुङ्कुमादिग्धा हर्यश्वाद्यमरार्चिता ।
हरिकेशसखी हादिविद्या हालामदालसा ॥ २३ ॥

सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला।
सर्वकर्त्री सर्वभर्त्री सर्वहन्त्री सनातनी॥ २४॥
सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी।
सर्वात्मिका सर्वसौख्यदात्री सर्वविमोहिनी॥ २५॥
सर्वाधारा सर्वगता सर्वावगुणवर्जिता।
सर्वारुणा सर्वमाता सर्वाभरणभूषिता॥ २६॥
ककारार्था कालहन्त्री कामेशी कामितार्थदा।
कामसञ्जीवनी कल्या कठिनस्तनमण्डला॥ २७॥
करभोरूः कलानाथमुखी कचजिताम्बुदा।
कटाक्षस्यन्दिकरुणा कपालिप्राणनायिका॥ २८॥
कारुण्यविग्रहा कान्ता कान्तिधूतजपावलिः।
कलालापा कम्बुकण्ठी करनिर्जितपल्लवा॥ २९॥
कल्पवल्लीसमभुजा कस्तूरीतिलकाञ्चिता।
हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला॥ ३०॥
हारहारिकुचाभोगा हाकिनी हल्यवर्जिता।
हरित्पतिसमाराध्या हठात्कारहतासुरा॥ ३१॥
हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा।
हल्लीशलास्यसन्तुष्टा हंसमन्त्रार्थरूपिणी॥ ३२॥
हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी।
हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता॥ ३३॥
हैयङ्गवीनहृदया हरिगोपारुणांशुका।
लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी॥ ३४॥
लास्यदर्शनसन्तुष्टा लाभालाभविवर्जिता।
लङ्घ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा॥ ३५॥
लाक्षारससवर्णाभा लक्ष्मणाग्रजपूजिता।
लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा॥ ३६॥

लग्नचामरहस्तश्रीशारदापरिवीजिता ।
लज्जापदसमाराध्या लम्पटा लकुलेश्वरी ॥ ३७ ॥
लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः ।
ह्रीङ्कारिणी च ह्रीङ्कारी ह्रींमध्या ह्रींशिखामणिः ॥ ३८ ॥
ह्रीङ्कारकुण्डाग्निशिखा ह्रीङ्कारशशिचन्द्रिका ।
ह्रीङ्कारभास्कररुचिः ह्रीङ्काराम्भोदचञ्चला ॥ ३९ ॥
ह्रीङ्कारकन्दांकुरिका ह्रीङ्कारैकपरायणा ।
ह्रीङ्कारदीर्घिका हंसी ह्रीङ्कारोद्यानकेकिनी ॥ ४० ॥
ह्रीङ्कारारण्यहरिणी ह्रीङ्कारावालवल्लरी ।
ह्रीङ्कारपञ्जरशुकी ह्रीङ्कारांगणदीपिका ॥ ४१ ॥
ह्रीङ्कारकन्दरासिंही ह्रीङ्काराम्भोजभृङ्गिका ।
ह्रीङ्कारसुमनोमाध्वी ह्रीङ्कारतरुमञ्जरी ॥ ४२ ॥
सकाराख्या समरसा सकलागमसंस्तुता ।
सर्ववेदांततात्पर्यभूमिस्सदसदाश्रया ॥ ४३ ॥
सकला सच्चिदानन्दा साध्वी सद्‌गतिदायिनी ।
सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ॥ ४४ ॥
सकलाधिष्ठानरूपा सत्त्वरूपा समाकृतिः ।
सर्वप्रपञ्चनिर्मात्री समानाधिकवर्जिता ॥ ४५ ॥
सर्वोत्तुङ्गा सङ्गहीना सगुणा सकलेष्टदा ।
ककारिणी काव्यलोला कामेश्वरमनोहरा ॥ ४६ ॥
कामेश्वरप्राणनाडी कामेशोत्सङ्गवासिनी ।
कामेश्वरालिङ्गिताङ्गी कामेश्वरसुखप्रदा ॥ ४७ ॥
कामेश्वरप्रणयिनी कामेश्वरविलासिनी ।
कामेश्वरतपस्सिद्धिः कामेश्वरमनःप्रिया ॥ ४८ ॥
कामेश्वरप्राणनाथा कामेश्वरविमोहिनी ।
कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ॥ ४९ ॥

कामेश्वराह्लादकरी कामेश्वरमहेश्वरी।
कामेश्वरी कामकोटिनिलया कांक्षितार्थदा॥ ५०॥
लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता।
लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा॥ ५१॥
लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः।
लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी॥ ५२॥
लब्धातिशयसर्वाङ्गसौन्दर्या लब्धविभ्रमा।
लब्धरागा लब्धपतिर्लब्धनानागमस्थितिः॥ ५३॥
लब्धभोगा लब्धसुखा लब्धहर्षाभिपूरिता।
ह्रीङ्कारमूर्तिर्ह्रीङ्कारसौधशृङ्गकपोतिका॥ ५४॥
ह्रीङ्कारदुग्धाब्धिसुधा ह्रीङ्कारकमलेन्दिरा।
ह्रीङ्कारमणिदीपार्चिर्ह्रीङ्कारतरुशारिका॥ ५५॥
ह्रींकारपेटकमणिर्ह्रीङ्कारादर्शबिम्बिता।
ह्रीङ्कारकोशासिलता ह्रीङ्कारास्थाननर्तकी॥ ५६॥
ह्रीङ्कारशुक्तिकामुक्तामणिर्ह्रीङ्कारबोधिता।
ह्रीङ्कारमयसौवर्णस्तम्भविद्रुमपुत्रिका॥ ५७॥
ह्रीङ्कारवेदोपनिषद्ह्रीङ्काराध्वरदक्षिणा।
ह्रीङ्कारनन्दनारामनवकल्पकवल्लरी॥ ५८॥
ह्रीङ्कारहिमवद्गङ्गा ह्रीङ्कारार्णवकौस्तुभा।
ह्रीङ्कारमन्त्रसर्वस्वा ह्रीङ्कारपरसौख्यदा॥ ५९॥

*श्रीहयग्रीव उवाच*

इत्येवं ते मयाऽऽख्यातं देव्या नाम शतत्रयम्।
रहस्यातिरहस्यत्वाद् गोपनीयं महामुने॥ ६०॥
शिववर्णानि नामानि श्रीदेवीकथितानि हि।
शक्त्यक्षराणि नामानि कामेशकथितानि च॥ ६१॥

उभयाक्षरनामानि ह्युभाभ्यां कथितानि वै।
तदन्यैर्ग्रथितं स्तोत्रमेतस्य सदृशं किमु॥ ६२॥
नानेन सदृशं स्तोत्रं श्रीदेवीप्रीतिदायकम्।
लोकत्रयेऽपि कल्याणं सम्भवेन्नात्र संशयः॥ ६३॥

*सूत उवाच*

इति हयमुखगीतं स्तोत्रराजं निशम्य
प्रगलितकलुषोऽभूच्चित्तपर्याप्तिमेत्य।
निजगुरुमथ नत्वा कुम्भजन्मा तदुक्तं
पुनरधिकरहस्यं ज्ञातुमेवं जगाद॥ ६४॥

*अगस्त्य उवाच*

अश्वानन महाभाग रहस्यमपि मे वद।
शिववर्णानि कान्यत्र शक्तिवर्णानि कानि हि।
उभयोरपि वर्णानि कानि मे वद देशिक॥ ६५॥

*सूत उवाच*

इति पृष्टः कुम्भजेन हयग्रीवोऽवदत्पुनः।
तव गोप्यं किमस्तीह साक्षादम्बाकटाक्षतः॥ ६६॥
इदं त्वतिरहस्यं ते वक्ष्यामि शृणु कुम्भज।
एतद्विज्ञानमात्रेण श्रीविद्या सिद्धिदा भवेत्॥ ६७॥
कत्रयं हद्वयं चैव शैवो भागः प्रकीर्तितः।
शक्त्यक्षराणि शेषाणि ह्रींकार उभयात्मकः॥ ६८॥
एवं विभागमज्ञात्वा श्रीविद्याजपशालिनः।
न तेषां सिद्धिदा विद्या कल्पकोटिशतैरपि॥ ६९॥
चतुर्भिश्शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः।
नवचक्रैस्तु संसिद्धं श्रीचक्रं शिवयोर्वपुः॥ ७०॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च वै॥ ७१॥

बिन्दुश्चाष्टदळं पद्मं पद्मं षोडशपत्रकम्।
चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात्॥ ७२॥
त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम्।
दशारयोष्षोडशारं भूपुरं भुवनाश्रके।
शैवानामपि शाक्तानां चक्राणां च परस्परम्॥ ७३॥
अविनाभावसम्बन्धं यो जानाति स चक्रवित्।
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपश्शिवस्स्मृतः॥ ७४॥
अविनाभावसम्बन्धस्तस्माद्बिन्दुत्रिकोणयोः ।
एवं विभागमज्ञात्वा श्रीचक्रं यस्समर्चयेत्॥ ७५॥
न तत्फलमवाप्नोति ललिताम्बा न तुष्यति।
ये च जानन्ति लोकेऽस्मिन् श्रीविद्याचक्रवेदिनः॥ ७६॥
सामान्यवेदिनस्ते वै विशेषज्ञोऽतिदुर्लभः।
स्वयं विद्याविशेषज्ञो विशेषज्ञं समर्चयेत्॥ ७७॥
तस्मै देयं ततो ग्राह्यं श्रीविद्याचक्रवेदिना।
अन्धं तमः प्रविशन्ति ये ह्यविद्यामुपासते॥ ७८॥
इति श्रुतिरपाहैतानविद्योपासकान् पुनः।
विद्यानुपासकानेव निन्दत्यारुणिकी श्रुतिः॥ ७९॥
अश्रृता सश्रृतासश्च यज्वानो येऽप्ययज्वनः।
स्वर्यन्तो नानपेक्षन्त इन्द्रमग्निं च ये विदुः॥ ८०॥
सिकता इव संयान्ति रश्मिभिस्समुदीरिताः।
अस्माल्लोकादमुष्माच्चेत्याह चारण्यकी श्रुतिः॥ ८१॥
यस्य नो पश्चिमं जन्म यदि वा शङ्करस्स्वयम्।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी॥ ८२॥
इति तन्त्रेषु बहुधा विद्याया महिमोच्यते।
मोक्षैकहेतुविद्या तु श्रीविद्यैव न संशयः॥ ८३॥

न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते।
मोक्षैकहेतुविद्या सा श्रीविद्यैव न संशयः॥ ८४॥
तस्माद् विद्याविदेवात्र विद्वान् विद्वानितीर्यते।
स्वयं विद्याविशेषज्ञो विद्यामाहात्म्यवेद्यपि॥ ८५॥
विद्याविदं नार्चयेच्चेत् को वा तं पूजयेज्जनः।
प्रसंगादेतदुक्तं ते प्रकृतं शृणु कुम्भज॥ ८६॥
यः कीर्तयेत्सकृद्भक्त्या दिव्यं नाम्नां शतत्रयम्।
तस्य पुण्यफलं वक्ष्ये विस्तरेण घटोद्भव॥ ८७॥
रहस्यनामसाहस्रपाठे यत्फलमीरितम्।
तत्कोटिकोटिगुणितमेकनामजपाद् भवेत्॥ ८८॥
कामेश्वराभ्यां तदिदं कृतं नामशतत्रयम्।
नान्येन तुलयेदेतत्स्तोत्रेणान्यकृतेन तु॥ ८९॥
श्रियः परंपरा यस्य भाविनी तूत्तरोत्तरम्।
तेनैव लभ्यते नाम्नां त्रिशती सर्वकामदा॥ ९०॥
अस्या नाम्नां त्रिशत्यास्तु महिमा केन वर्ण्यते।
या स्वयं शिवयोर्वक्त्रपद्माभ्यां परिनिस्सृता॥ ९१॥
नित्या षोडशिकारूपान्विप्रानादौ तु भोजयेत्।
अभ्यक्तान् गन्धतैलेन स्नातानुष्णेन वारिणा॥ ९२॥
अभ्यर्च्य वस्त्रगन्धाद्यैः कामेश्वर्यादिनामभिः।
सूपापूपैः शर्कराद्यैः पायसैः फलसंयुतैः॥ ९३॥
विद्याविदो विशेषेण भोजयेत्षोडश द्विजान्।
एवं नित्यबलिं कुर्यादादौ ब्राह्मणभोजने॥ ९४॥
पश्चात्त्रिशत्या नाम्नां तु ब्राह्मणान् क्रमशोऽर्चयेत्।
तैलाभ्यंगादिकं दद्याद्विभवे सति भक्तितः॥ ९५॥
शुक्लप्रतिपदारभ्य पौर्णमास्यवधिः क्रमात्।
दिवसे दिवसे विप्रा भोज्या विंशतिसंख्यया॥ ९६॥

दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिनैः।
त्रिंशत्षष्टिं शतं विप्रान् भोजयेत् त्रिशतं क्रमात्॥ ९७ ॥
एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः।
तस्यैवं सफलं जन्म मुक्तिस्तस्य करे स्थिता॥ ९८ ॥
रहस्यनामसाहस्रैरर्चनेप्येवमेव हि।
आदौ नित्यबलिं कुर्यात् पश्चाद् ब्राह्मणभोजनम्॥ ९९ ॥
रहस्यनामसाहस्रमहिमा यो मयोदितः।
स शीकराणुरत्रैकनाम्नो महिमवारिधेः॥ १०० ॥
वाग्देवीरचिते नामसाहस्रे यद्यदीरितम्।
तत्तत्फलमवाप्नोति नाम्नोऽप्येकस्य कीर्तनात्॥ १०१ ॥
एतदन्यैर्जपैस्स्तोत्रैरर्चनैर्यत्फलं भवेत्।
तत्फलं कोटिगुणितं भवेन्नामशतत्रयात्॥ १०२ ॥
रहस्यनामसाहस्रकोट्यावृत्यास्तु यत्फलम्।
तद्भवेत्कोटिगुणितं नामत्रिशतकीर्तनात्॥ १०३ ॥
वाग्देवीरचिते स्तोत्रे तादृशो महिमा यदि।
साक्षात्कामेशकामेशीकृतेऽस्मिन् गृह्यतामिति॥ १०४ ॥
सकृत्सङ्कीर्तनादेव नाम्नामस्मिन् शतत्रये।
भवेच्चित्तस्य पर्याप्तिर्नूनमन्यानपेक्षिणी॥ १०५ ॥
न ज्ञातव्यमितोप्यन्यन् न जप्तव्यं च कुम्भज।
यदसाध्यतमं कार्यं तत्तदर्थमिदं जपेत्॥ १०६ ॥
तत्तत्सिद्धिमवाप्नोति पश्चात्कार्यं परीक्षयेत्।
ये ये प्रयोगास्तन्त्रेषु तैस्तैर्यत्साध्यते ध्रुवम्॥ १०७ ॥
तत्सर्वं सिद्ध्यति क्षिप्रं नामत्रिशतकीर्तनात्।
आयुष्करं पुष्टिकरं पुत्रदं वश्यकारकम्॥ १०८ ॥
विद्याप्रदं कीर्तिकरं सुकवित्वप्रदायकम्।
सर्वसम्पत्प्रदं सर्वभोगदं सर्वसौख्यदम्॥ १०९ ॥

सर्वाभीष्टप्रदं चैव देवीनामशतत्रयम्।
एतज्जपपरो भूयान्नान्यदिच्छेत्कदाचन॥ ११०॥
एतत्कीर्तनसन्तुष्टा श्रीदेवी ललिताम्बिका।
भक्तस्य यद्यदिष्टं स्यात्तत्तत्पूरयते ध्रुवम्॥ १११॥
तस्मात्कुम्भोद्भवमुने! कीर्तय त्वमिदं सदा।
अपरं किञ्चिदपि ते बोद्धव्यं नावशिष्यते॥ ११२॥
इति ते कथितं स्तोत्रं ललिताप्रीतिदायकम्।
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन॥ ११३॥
न शठाय न दुष्टाय नाविश्वासाय कर्हिचित्।
यो ब्रूयात् त्रिशतीं नाम्नां तस्यानर्थो महान् भवेत्॥ ११४॥
इत्याज्ञा शांकरी प्रोक्ता तस्माद् गोप्यमिदं त्वया।
ललिताप्रेरितेनैव मयोक्तं स्तोत्रमुत्तमम्॥ ११५॥
रहस्यनामसाहस्रादतिगोप्यमिदं मुने।
एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम्॥ ११६॥
स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरीम्।
आनन्दलहरीमग्नमानसस्समवर्तत॥ ११७॥

*इति श्रीब्रह्माण्डपुराणे श्रीहयग्रीवागस्त्यसंवादे श्रीललितोपाख्याने स्तोत्रखण्डे श्रीललिताम्बात्रिशतीस्तोत्ररत्नं सर्वसम्पूर्तिकरं समाप्तम्॥*

# श्रीललितात्रिशतीस्तोत्ररत्ननामावलिः

अस्य श्रीललितात्रिशतीस्तोत्रमालामन्त्रस्य हयग्रीवऋषये नमः (शिरसि) अनुष्टुप्छन्दसे नमः (मुखे), श्रीललिताम्बादेवतायै नमः हृदये, क० ५ बीजाय नमः गुह्ये, स० ४ शक्तये नमः (पादयोः), ह० ६ कीलकाय नमः (नाभौ), श्रीललिताम्बाप्रसादसिद्धये पूजने विनियोगाय नमः करसम्पुटे। कूटत्रयं द्विरावृत्त्य बालया वा षडङ्गद्वयम्।

## अथ ध्यानम्

अतिमधुरचापहस्तामपरिमितामोदबाणसौभाग्याम् ।
अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे ॥

(लमिति पञ्चोपचारैः सम्पूज्य-)

१ ॐ ऐं ह्रीं श्रीं ककाररूपायै नमः
२ ॐ ऐं ह्रीं श्रीं कल्याण्यै नमः
३ ॐ ऐं ह्रीं श्रीं कल्याणगुण-शालिन्यै नमः
४ ॐ ऐं ह्रीं श्रीं कल्याणशैल-निलयायै नमः
५ ॐ ऐं ह्रीं श्रीं कमनीयायै नमः
६ ॐ ऐं ह्रीं श्रीं कलावत्यै नमः
७ ॐ ऐं ह्रीं श्रीं कमलाक्ष्यै नमः
८ ॐ ऐं ह्रीं श्रीं कल्मषघ्न्यै नमः
९ ॐ ऐं ह्रीं श्रीं करुणामृत-सागरायै नमः
१० ॐ ऐं ह्रीं श्रीं कदम्ब-काननावासायै नमः
११ ॐ ऐं ह्रीं श्रीं कदम्बकुसुम-प्रियायै नमः
१२ ॐ ऐं ह्रीं श्रीं कन्दर्पविद्यायै नमः
१३ ॐ ऐं ह्रीं श्रीं कन्दर्पजनकापाङ्ग-वीक्षणायै नमः
१४ ॐ ऐं ह्रीं श्रीं कर्पूरवीटीसौरभ्य-कल्लोलितककुप्तटायै नमः
१५ ॐ ऐं ह्रीं श्रीं कलिदोषहरायै नमः
१६ ॐ ऐं ह्रीं श्रीं कञ्जलोचनायै नमः
१७ ॐ ऐं ह्रीं श्रीं कम्रविग्रहायै नमः
१८ ॐ ऐं ह्रीं श्रीं कर्मादिसाक्षिण्यै नमः
१९ ॐ ऐं ह्रीं श्रीं कारयित्र्यै नमः
२० ॐ ऐं ह्रीं श्रीं कर्मफलप्रदायै नमः
२१ ॐ ऐं ह्रीं श्रीं एकाररूपायै नमः
२२ ॐ ऐं ह्रीं श्रीं एकाक्षर्यै नमः
२३ ॐ ऐं ह्रीं श्रीं एकानेकाक्षरा-कृत्यै नमः
२४ ॐ ऐं ह्रीं श्रीं एतत्तदित्य-निर्देश्यायै नमः
२५ ॐ ऐं ह्रीं श्रीं एकानन्दचिदा-कृत्यै नमः
२६ ॐ ऐं ह्रीं श्रीं एवमित्यागमा-बोध्यायै नमः
२७ ॐ ऐं ह्रीं श्रीं एकभक्ति-मदर्चितायै नमः

२८ ॐ ऐं ह्रीं श्रीं एकाग्रचित्त-निर्ध्यातायै नमः
२९ ॐ ऐं ह्रीं श्रीं एषणारहितादृतायै नमः
३० ॐ ऐं ह्रीं श्रीं एलासुगन्धि-चिकुरायै नमः
३१ ॐ ऐं ह्रीं श्रीं एनःकूट-विनाशिन्यै नमः
३२ ॐ ऐं ह्रीं श्रीं एकभोगायै नमः
३३ ॐ ऐं ह्रीं श्रीं एकरसायै नमः
३४ ॐ ऐं ह्रीं श्रीं एकैश्वर्य-प्रदायिन्यै नमः
३५ ॐ ऐं ह्रीं श्रीं एकातपत्रसाम्राज्य-प्रदायै नमः
३६ ॐ ऐं ह्रीं श्रीं एकान्तपूजितायै नमः
३७ ॐ ऐं ह्रीं श्रीं एधमानप्रभायै नमः
३८ ॐ ऐं ह्रीं श्रीं एजदनेक-जगदीश्वर्यै नमः
३९ ॐ ऐं ह्रीं श्रीं एकवीरादि-संसेव्यायै नमः
४० ॐ ऐं ह्रीं श्रीं एकप्राभव-शालिन्यै नमः
४१ ॐ ऐं ह्रीं श्रीं ईकाररूपायै नमः
४२ ॐ ऐं ह्रीं श्रीं ईशित्र्यै नमः
४३ ॐ ऐं ह्रीं श्रीं ईप्सितार्थप्रदायिन्यै नमः
४४ ॐ ऐं ह्रीं श्रीं ईदृगित्य-विनिर्देश्यायै नमः
४५ ॐ ऐं ह्रीं श्रीं ईश्वरत्व-विधायिन्यै नमः
४६ ॐ ऐं ह्रीं श्रीं ईशानादिब्रह्ममय्यै नमः
४७ ॐ ऐं ह्रीं श्रीं ईशित्वाद्यष्ट-सिद्धिदायै नमः
४८ ॐ ऐं ह्रीं श्रीं ईक्षित्र्यै नमः
४९ ॐ ऐं ह्रीं श्रीं ईक्षणसृष्टाण्ड-कोट्यै नमः
५० ॐ ऐं ह्रीं श्रीं ईश्वरवल्लभायै नमः
५१ ॐ ऐं ह्रीं श्रीं ईडितायै नमः
५२ ॐ ऐं ह्रीं श्रीं ईश्वरार्धाङ्ग-शरीरायै नमः
५३ ॐ ऐं ह्रीं श्रीं ईशाधिदेवतायै नमः
५४ ॐ ऐं ह्रीं श्रीं ईश्वरप्रेरणकर्यै नमः
५५ ॐ ऐं ह्रीं श्रीं ईशताण्डव-साक्षिण्यै नमः
५६ ॐ ऐं ह्रीं श्रीं ईश्वरोत्सङ्ग-निलयायै नमः
५७ ॐ ऐं ह्रीं श्रीं ईतिबाधा-विनाशिन्यै नमः
५८ ॐ ऐं ह्रीं श्रीं ईहाविरहितायै नमः
५९ ॐ ऐं ह्रीं श्रीं ईशशक्त्यै नमः
६० ॐ ऐं ह्रीं श्रीं ईषत्स्मिताननायै नमः
६१ ॐ ऐं ह्रीं श्रीं लकाररूपायै नमः
६२ ॐ ऐं ह्रीं श्रीं ललितायै नमः
६३ ॐ ऐं ह्रीं श्रीं लक्ष्मीवाणी-निषेवितायै नमः
६४ ॐ ऐं ह्रीं श्रीं लाकिन्यै नमः
६५ ॐ ऐं ह्रीं श्रीं ललनारूपायै नमः
६६ ॐ ऐं ह्रीं श्रीं लसद्दाडिमपाटलायै नमः
६७ ॐ ऐं ह्रीं श्रीं ललन्तिका-लसत्फालायै नमः

६८ ॐ ऐं ह्रीं श्रीं ललाटनयनार्चितायै नमः
६९ ॐ ऐं ह्रीं श्रीं लक्षणोज्ज्वलदिव्याङ्ग्यै नमः
७० ॐ ऐं ह्रीं श्रीं लक्षकोट्यण्डनायिकायै नमः
७१ ॐ ऐं ह्रीं श्रीं लक्ष्यार्थायै नमः
७२ ॐ ऐं ह्रीं श्रीं लक्षणागम्यायै नमः
७३ ॐ ऐं ह्रीं श्रीं लब्धकामायै नमः
७४ ॐ ऐं ह्रीं श्रीं लतातनवे नमः
७५ ॐ ऐं ह्रीं श्रीं ललामराजदलिकायै नमः
७६ ॐ ऐं ह्रीं श्रीं लम्बिमुक्तालताञ्चितायै नमः
७७ ॐ ऐं ह्रीं श्रीं लम्बोदरप्रसुवे नमः
७८ ॐ ऐं ह्रीं श्रीं लभ्यायै नमः
७९ ॐ ऐं ह्रीं श्रीं लज्जाढ्यायै नमः
८० ॐ ऐं ह्रीं श्रीं लयवर्जितायै नमः
८१ ॐ ऐं ह्रीं श्रीं ह्रींकाररूपायै नमः
८२ ॐ ऐं ह्रीं श्रीं ह्रींकारनिलयायै नमः
८३ ॐ ऐं ह्रीं श्रीं ह्रींपदप्रियायै नमः
८४ ॐ ऐं ह्रीं श्रीं ह्रींकारबीजायै नमः
८५ ॐ ऐं ह्रीं श्रीं ह्रींकारमन्त्रायै नमः
८६ ॐ ऐं ह्रीं श्रीं ह्रींकारलक्षणायै नमः
८७ ॐ ऐं ह्रीं श्रीं ह्रींकारजपसुप्रीतायै नमः
८८ ॐ ऐं ह्रीं श्रीं ह्रींमत्यै नमः
८९ ॐ ऐं ह्रीं श्रीं ह्रींविभूषणायै नमः
९० ॐ ऐं ह्रीं श्रीं ह्रींशीलायै नमः
९१ ॐ ऐं ह्रीं श्रीं ह्रींपदाराध्यायै नमः
९२ ॐ ऐं ह्रीं श्रीं ह्रींगर्भायै नमः
९३ ॐ ऐं ह्रीं श्रीं ह्रींपदाभिधायै नमः
९४ ॐ ऐं ह्रीं श्रीं ह्रींकारवाच्यायै नमः
९५ ॐ ऐं ह्रीं श्रीं ह्रींकारपूज्यायै नमः
९६ ॐ ऐं ह्रीं श्रीं ह्रींकारपीठिकायै नमः
९७ ॐ ऐं ह्रीं श्रीं ह्रींकारवेद्यायै नमः
९८ ॐ ऐं ह्रीं श्रीं ह्रींकारचिन्त्यायै नमः
९९ ॐ ऐं ह्रीं श्रीं ह्रीं नमः
१०० ॐ ऐं ह्रीं श्रीं ह्रीं शरीरिण्यै नमः
१०१ ॐ ऐं ह्रीं श्रीं हकाररूपायै नमः
१०२ ॐ ऐं ह्रीं श्रीं हलधृक्पूजितायै नमः
१०३ ॐ ऐं ह्रीं श्रीं हरिणेक्षणायै नमः
१०४ ॐ ऐं ह्रीं श्रीं हरप्रियायै नमः
१०५ ॐ ऐं ह्रीं श्रीं हराराध्यायै नमः
१०६ ॐ ऐं ह्रीं श्रीं हरिब्रह्मेन्द्रवन्दितायै नमः
१०७ ॐ ऐं ह्रीं श्रीं हयारूढासेविताङ्घ्र्यै नमः
१०८ ॐ ऐं ह्रीं श्रीं हयमेधसमर्चितायै नमः
१०९ ॐ ऐं ह्रीं श्रीं हर्यक्षवाहनायै नमः
११० ॐ ऐं ह्रीं श्रीं हंसवाहनायै नमः
१११ ॐ ऐं ह्रीं श्रीं हतदानवायै नमः
११२ ॐ ऐं ह्रीं श्रीं हत्यादिपापशमन्यै नमः
११३ ॐ ऐं ह्रीं श्रीं हरिदश्वादिसेवितायै नमः
११४ ॐ ऐं ह्रीं श्रीं हस्तिकुम्भोत्तुङ्गकुचायै नमः
११५ ॐ ऐं ह्रीं श्रीं हस्तिकृत्तिप्रियाङ्गनायै नमः

११६ ॐ ऐं ह्रीं श्रीं हरिद्राकुङ्कुमा-
दिग्धायै नमः
११७ ॐ ऐं ह्रीं श्रीं हर्यश्वाद्य-
मरार्चितायै नमः
११८ ॐ ऐं ह्रीं श्रीं हरिकेशसख्यै नमः
११९ ॐ ऐं ह्रीं श्रीं हादिविद्यायै नमः
१२० ॐ ऐं ह्रीं श्रीं हालामदालसायै नमः
१२१ ॐ ऐं ह्रीं श्रीं सकाररूपायै नमः
१२२ ॐ ऐं ह्रीं श्रीं सर्वज्ञायै नमः
१२३ ॐ ऐं ह्रीं श्रीं सर्वेश्यै नमः
१२४ ॐ ऐं ह्रीं श्रीं सर्वमङ्गलायै नमः
१२५ ॐ ऐं ह्रीं श्रीं सर्वकर्त्र्यै नमः
१२६ ॐ ऐं ह्रीं श्रीं सर्वभर्त्र्यै नमः
१२७ ॐ ऐं ह्रीं श्रीं सर्वहन्त्र्यै नमः
१२८ ॐ ऐं ह्रीं श्रीं सनातन्यै नमः
१२९ ॐ ऐं ह्रीं श्रीं सर्वानवद्यायै नमः
१३० ॐ ऐं ह्रीं श्रीं सर्वाङ्गसुन्दर्यै नमः
१३१ ॐ ऐं ह्रीं श्रीं सर्वसाक्षिण्यै नमः
१३२ ॐ ऐं ह्रीं श्रीं सर्वात्मिकायै नमः
१३३ ॐ ऐं ह्रीं श्रीं सर्वसौख्यदात्र्यै नमः
१३४ ॐ ऐं ह्रीं श्रीं सर्वविमोहिन्यै नमः
१३५ ॐ ऐं ह्रीं श्रीं सर्वाधारायै नमः
१३६ ॐ ऐं ह्रीं श्रीं सर्वगतायै नमः
१३७ ॐ ऐं ह्रीं श्रीं सर्वावगुण-
वर्जितायै नमः
१३८ ॐ ऐं ह्रीं श्रीं सर्वारुणायै नमः
१३९ ॐ ऐं ह्रीं श्रीं सर्वमात्रे नमः
१४० ॐ ऐं ह्रीं श्रीं सर्वभूषण-
भूषितायै नमः
१४१ ॐ ऐं ह्रीं श्रीं ककारार्थायै नमः
१४२ ॐ ऐं ह्रीं श्रीं कालहन्त्र्यै नमः
१४३ ॐ ऐं ह्रीं श्रीं कामेश्यै नमः
१४४ ॐ ऐं ह्रीं श्रीं कामितार्थदायै नमः
१४५ ॐ ऐं ह्रीं श्रीं कामसञ्जीवन्यै नमः
१४६ ॐ ऐं ह्रीं श्रीं कल्यायै नमः
१४७ ॐ ऐं ह्रीं श्रीं कठिनस्तन-
मण्डलायै नमः
१४८ ॐ ऐं ह्रीं श्रीं करभोरवे नमः
१४९ ॐ ऐं ह्रीं श्रीं कलानाथमुख्यै नमः
१५० ॐ ऐं ह्रीं श्रीं कचजिताम्बुदायै
नमः
१५१ ॐ ऐं ह्रीं श्रीं कटाक्षस्यन्दि-
करुणायै नमः
१५२ ॐ ऐं ह्रीं श्रीं कपालिप्राण-
नायिकायै नमः
१५३ ॐ ऐं ह्रीं श्रीं कारुण्यविग्रहायै-
नमः
१५४ ॐ ऐं ह्रीं श्रीं कान्तायै नमः
१५५ ॐ ऐं ह्रीं श्रीं कान्तिधूतजपा-
वल्यै नमः
१५६ ॐ ऐं ह्रीं श्रीं कलालापायै नमः
१५७ ॐ ऐं ह्रीं श्रीं कम्बुकण्ठ्यै नमः
१५८ ॐ ऐं ह्रीं श्रीं करनिर्जित-
पल्लवायै नमः
१५९ ॐ ऐं ह्रीं श्रीं कल्पवल्लीसम-
भुजायै नमः
१६० ॐ ऐं ह्रीं श्रीं कस्तूरीतिल-
काञ्चितायै नमः
१६१ ॐ ऐं ह्रीं श्रीं हकारार्थायै नमः
१६२ ॐ ऐं ह्रीं श्रीं हंसगत्यै नमः
१६३ ॐ ऐं ह्रीं श्रीं हाटका-
भरणोज्ज्वलायै नमः
१६४ ॐ ऐं ह्रीं श्रीं हारहारिकुचा-
भोगायै नमः

१६५ ॐ ऐं ह्रीं श्रीं हाकिन्यै नमः
१६६ ॐ ऐं ह्रीं श्रीं हल्यवर्जितायै नमः
१६७ ॐ ऐं ह्रीं श्रीं हरित्पति-समाराध्यायै नमः
१६८ ॐ ऐं ह्रीं श्रीं हठात्कारहता-सुरायै नमः
१६९ ॐ ऐं ह्रीं श्रीं हर्षप्रदायै नमः
१७० ॐ ऐं ह्रीं श्रीं हविर्भोक्त्र्यै नमः
१७१ ॐ ऐं ह्रीं श्रीं हार्दसन्तमसापहायै नमः
१७२ ॐ ऐं ह्रीं श्रीं हल्लीसलास्य-सन्तुष्टायै नमः
१७३ ॐ ऐं ह्रीं श्रीं हंसमन्त्रार्थरूपिण्यै नमः
१७४ ॐ ऐं ह्रीं श्रीं हानोपादान-निर्मुक्तायै नमः
१७५ ॐ ऐं ह्रीं श्रीं हर्षिण्यै नमः
१७६ ॐ ऐं ह्रीं श्रीं हरिसोदर्यै नमः
१७७ ॐ ऐं ह्रीं श्रीं हाहाहूहूमुख-स्तुत्यायै नमः
१७८ ॐ ऐं ह्रीं श्रीं हानिवृद्धि-विवर्जितायै नमः
१७९ ॐ ऐं ह्रीं श्रीं हैय्यङ्गवीनहृदयायै नमः
१८० ॐ ऐं ह्रीं श्रीं हरिगोपारुणां-शुकायै नमः
१८१ ॐ ऐं ह्रीं श्रीं लकाराख्यायै नमः
१८२ ॐ ऐं ह्रीं श्रीं लतापूज्यायै नमः
१८३ ॐ ऐं ह्रीं श्रीं लयस्थित्युद्भवे-श्वर्यै नमः
१८४ ॐ ऐं ह्रीं श्रीं लास्यदर्शसन्तुष्टायै नमः
१८५ ॐ ऐं ह्रीं श्रीं लाभालाभ-विवर्जितायै नमः
१८६ ॐ ऐं ह्रीं श्रीं लङ्घ्येतराज्ञायै नमः
१८७ ॐ ऐं ह्रीं श्रीं लावण्यशालिन्यै नमः
१८८ ॐ ऐं ह्रीं श्रीं लघुसिद्धिदायै नमः
१८९ ॐ ऐं ह्रीं श्रीं लाक्षारस-वर्णाभायै नमः
१९० ॐ ऐं ह्रीं श्रीं लक्ष्मणाग्रज-पूजितायै नमः
१९१ ॐ ऐं ह्रीं श्रीं लभ्येतरायै नमः
१९२ ॐ ऐं ह्रीं श्रीं लब्धभक्ति-सुलभायै नमः
१९३ ॐ ऐं ह्रीं श्रीं लाङ्गलायुधायै नमः
१९४ ॐ ऐं ह्रीं श्रीं लग्नचामरहस्त-श्रीशारदापरिवीजितायै नमः
१९५ ॐ ऐं ह्रीं श्रीं लज्जापद-समाराध्यायै नमः
१९६ ॐ ऐं ह्रीं श्रीं लम्पटायै नमः
१९७ ॐ ऐं ह्रीं श्रीं लकुलेश्वर्यै नमः
१९८ ॐ ऐं ह्रीं श्रीं लब्धमानायै नमः
१९९ ॐ ऐं ह्रीं श्रीं लब्धरसायै नमः
२०० ॐ ऐं ह्रीं श्रीं लब्धसम्पत्समुन्नत्यै नमः
२०१ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारिण्यै नमः
२०२ ॐ ऐं ह्रीं श्रीं ह्रीङ्काराद्यायै नमः
२०३ ॐ ऐं ह्रीं श्रीं ह्रींमध्यायै नमः
२०४ ॐ ऐं ह्रीं श्रीं ह्रींशिखामणये नमः
२०५ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारकुण्डाग्नि-शिखायै नमः
२०६ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारशशि-चन्द्रिकायै नमः

२०७ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारभास्कर-रुच्यै नमः
२०८ ॐ ऐं ह्रीं श्रीं ह्रीङ्काराम्भोद-चञ्चलायै नमः
२०९ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारकन्दाङ्कु-रिकायै नमः
२१० ॐ ऐं ह्रीं श्रीं ह्रीङ्कारैकपरायणायै नमः
२११ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारदीर्घिका-हंस्यै नमः
२१२ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारोद्यान-केकिन्यै नमः
२१३ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारारण्य-हरिण्यै नमः
२१४ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारावालवल्लयै नमः
२१५ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारपञ्जरशुक्यै नमः
२१६ ॐ ऐं ह्रीं श्रीं ह्रीङ्काराङ्गण-दीपिकायै नमः
२१७ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारकन्दरासिंह्यै नमः
२१८ ॐ ऐं ह्रीं श्रीं ह्रीङ्काराम्भोज-भृङ्गिकायै नमः
२१९ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारसुमनोमाध्वै नमः
२२० ॐ ऐं ह्रीं श्रीं ह्रीङ्कारतरुमञ्जर्यै नमः
२२१ ॐ ऐं ह्रीं श्रीं सकाराख्यायै नमः
२२२ ॐ ऐं ह्रीं श्रीं समरसायै नमः
२२३ ॐ ऐं ह्रीं श्रीं सकलागम-संस्तुतायै नमः
२२४ ॐ ऐं ह्रीं श्रीं सर्ववेदान्त-तात्पर्यभूम्यै नमः
२२५ ॐ ऐं ह्रीं श्रीं सदसदाश्रयायै नमः
२२६ ॐ ऐं ह्रीं श्रीं सकलायै नमः
२२७ ॐ ऐं ह्रीं श्रीं सच्चिदानन्दायै नमः
२२८ ॐ ऐं ह्रीं श्रीं साध्व्यै नमः
२२९ ॐ ऐं ह्रीं श्रीं सद्गति-दायिन्यै नमः
२३० ॐ ऐं ह्रीं श्रीं सनकादिमुनि-ध्येयायै नमः
२३१ ॐ ऐं ह्रीं श्रीं सदाशिव-कुटुम्बिन्यै नमः
२३२ ॐ ऐं ह्रीं श्रीं सकलाधिष्ठान-रूपायै नमः
२३३ ॐ ऐं ह्रीं श्रीं सत्यरूपायै नमः
२३४ ॐ ऐं ह्रीं श्रीं समाकृत्यै नमः
२३५ ॐ ऐं ह्रीं श्रीं सर्वप्रपञ्च-निर्मात्र्यै नमः
२३६ ॐ ऐं ह्रीं श्रीं समानाधिक-वर्जितायै नमः
२३७ ॐ ऐं ह्रीं श्रीं सर्वोत्तुङ्गायै नमः
२३८ ॐ ऐं ह्रीं श्रीं सङ्गहीनायै नमः
२३९ ॐ ऐं ह्रीं श्रीं सगुणायै नमः
२४० ॐ ऐं ह्रीं श्रीं सकलेष्टदायै नमः
२४१ ॐ ऐं ह्रीं श्रीं ककारिण्यै नमः
२४२ ॐ ऐं ह्रीं श्रीं काव्यलोलायै नमः
२४३ ॐ ऐं ह्रीं श्रीं कामेश्वर-मनोहरायै नमः
२४४ ॐ ऐं ह्रीं श्रीं कामेश्वर-प्राणनाड्यै नमः
२४५ ॐ ऐं ह्रीं श्रीं कामेशोत्सङ्ग-वासिन्यै नमः

२४६ ॐ ऐं ह्रीं श्रीं कामेश्वरालिङ्गिताङ्ग्यै नमः
२४७ ॐ ऐं ह्रीं श्रीं कामेश्वरसुखप्रदायै नमः
२४८ ॐ ऐं ह्रीं श्रीं कामेश्वरप्रणयिन्यै नमः
२४९ ॐ ऐं ह्रीं श्रीं कामेश्वरविलासिन्यै नमः
२५० ॐ ऐं ह्रीं श्रीं कामेश्वरतपस्सिद्ध्यै नमः
२५१ ॐ ऐं ह्रीं श्रीं कामेश्वरमनःप्रियायै नमः
२५२ ॐ ऐं ह्रीं श्रीं कामेश्वरप्राणनाथायै नमः
२५३ ॐ ऐं ह्रीं श्रीं कामेश्वरविमोहिन्यै नमः
२५४ ॐ ऐं ह्रीं श्रीं कामेश्वरब्रह्मविद्यायै नमः
२५५ ॐ ऐं ह्रीं श्रीं कामेश्वरगृहेश्वर्यै नमः
२५६ ॐ ऐं ह्रीं श्रीं कामेश्वराह्लादकर्यै नमः
२५७ ॐ ऐं ह्रीं श्रीं कामेश्वरमहेश्वर्यै नमः
२५८ ॐ ऐं ह्रीं श्रीं कामेश्वर्यै नमः
२५९ ॐ ऐं ह्रीं श्रीं कामकोटिनिलयायै नमः
२६० ॐ ऐं ह्रीं श्रीं काङ्क्षितार्थदायै नमः
२६१ ॐ ऐं ह्रीं श्रीं लकारिण्यै नमः
२६२ ॐ ऐं ह्रीं श्रीं लब्धरूपायै नमः
२६३ ॐ ऐं ह्रीं श्रीं लब्धधियै नमः
२६४ ॐ ऐं ह्रीं श्रीं लब्धवाञ्छितायै नमः
२६५ ॐ ऐं ह्रीं श्रीं लब्धपापमनोदूरायै नमः
२६६ ॐ ऐं ह्रीं श्रीं लब्धाहङ्कारदुर्गमायै नमः
२६७ ॐ ऐं ह्रीं श्रीं लब्धशक्त्यै नमः
२६८ ॐ ऐं ह्रीं श्रीं लब्धदेहायै नमः
२६९ ॐ ऐं ह्रीं श्रीं लब्धैश्वर्यसमुन्नत्यै नमः
२७० ॐ ऐं ह्रीं श्रीं लब्धवृद्ध्यै नमः
२७१ ॐ ऐं ह्रीं श्रीं लब्धलीलायै नमः
२७२ ॐ ऐं ह्रीं श्रीं लब्धयौवनशालिन्यै नमः
२७३ ॐ ऐं ह्रीं श्रीं लब्धातिशयसर्वाङ्गसौन्दर्यायै नमः
२७४ ॐ ऐं ह्रीं श्रीं लब्धविभ्रमायै नमः
२७५ ॐ ऐं ह्रीं श्रीं लब्धरागायै नमः
२७६ ॐ ऐं ह्रीं श्रीं लब्धपत्यै नमः
२७७ ॐ ऐं ह्रीं श्रीं लब्धनानागमस्थित्यै नमः
२७८ ॐ ऐं ह्रीं श्रीं लब्धभोगायै नमः
२७९ ॐ ऐं ह्रीं श्रीं लब्धसुखायै नमः
२८० ॐ ऐं ह्रीं श्रीं लब्धहर्षाभिपूरितायै नमः
२८१ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारमूर्तये नमः
२८२ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारसौधशृङ्गकपोतिकायै नमः
२८३ ॐ ऐं ह्रीं श्रीं ह्रीङ्कादुग्धाब्धिसुधायै नमः
२८४ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारकमलेन्दिरायै नमः

२८५ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारमणि-दीपार्चिषे नमः
२८६ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारतरु-शारिकायै नमः
२८७ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारपेटकमणये नमः
२८८ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारादर्श-बिम्बितायै नमः
२८९ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारकोशासि-लतायै नमः
२९० ॐ ऐं ह्रीं श्रीं ह्रीङ्कारस्थान-नर्तक्यै नमः
२९१ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारशुक्तिका-मुक्तामणये नमः
२९२ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारबोधितायै नमः
२९३ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारमयसौवर्ण-स्तम्भविद्रुमपुत्रिकायै नमः
२९४ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारवेदोपनिषदे नमः
२९५ ॐ ऐं ह्रीं श्रीं ह्रीङ्काराध्वर-दक्षिणायै नमः
२९६ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारनन्दनाराम-नवकल्पकवल्लर्यै नमः
२९७ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारहिमवद्-गङ्गायै नमः
२९८ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारार्णव-कौस्तुभायै नमः
२९९ ॐ ऐं ह्रीं श्रीं ह्रीङ्कारमन्त्र-सर्वस्वायै नमः
३०० ॐ ऐं ह्रीं श्रीं ह्रीङ्कारपर-सौख्यदायै नमः

ॐ ऐं, ह्रीं, श्रीं, श्रीमद्राजराजेश्वर्यै नमः
समाप्तेयं त्रिशतीस्तोत्रनामावलिः॥

# 'गीताप्रेस' गोरखपुरकी निजी दूकानें तथा स्टेशन-स्टाल

| | | |
|---|---|---|
| गोरखपुर-२७३००५ | गीताप्रेस —पो० गीताप्रेस | ✆ (०५५१) २३३४७२१, २३३१२५०; फैक्स २३३६९९७ |
| | website : www.gitapress.org / e-mail: booksales@gitapress.org | |
| दिल्ली-११०००६ | २६०९, नयी सड़क | ✆ (०११) २३२६९६७८; फैक्स २३२५९१४० |
| कोलकाता-७००००७ | गोबिन्दभवन-कार्यालय; १५१, महात्मा गाँधी रोड e-mail:gobindbhawan@gitapress.org | ✆ (०३३) २२६८६८९४; फैक्स २२६८०२५१ |
| मुम्बई-४००००२ | २८२, सामलदास गाँधी मार्ग (प्रिन्सेस स्ट्रीट) मरीन लाईन्स स्टेशनके पास | ✆ (०२२) २२०३०७१७ |
| कानपुर-२०८००१ | २४/५५, बिरहाना रोड | ✆ (०५१२) २३५२३५१; फैक्स २३५२३५१ |
| पटना-८००००४ | अशोकराजपथ, महिला अस्पतालके सामने | ✆ (०६१२) २३००३२५ |
| राँची-८३४००१ | कार्ट सराय रोड, अपर बाजार, बिड़ला गद्दीके प्रथम तलपर | ✆ (०६५१) २२१०६८५ |
| सूरत-३९५००१ | वैभव एपार्टमेन्ट, नूतन निवासके सामने, भटार रोड e-mail: suratdukan@gitapress.org | ✆ (०२६१) २२३७३६२, २२३८०६५ |
| इन्दौर-४५२००१ | जी० ५, श्रीवर्धन, ४ आर. एन. टी. मार्ग | ✆ (०७३१) २५२६५१६, २५११९७७ |
| जलगाँव-४२५००१ | ७, भीमसिंह मार्केट, रेलवे स्टेशनके पास | ✆ (०२५७) २२२६३९३ |
| हैदराबाद-५०००९५ | ४१, ४-४-१, दिलशाद प्लाजा, सुल्तान बाजार | ✆ (०४०) २४७५८३११ |
| नागपुर-४४०००२ | श्रीजी कृपा कॉम्प्लेक्स, ८५१, न्यू इतवारी रोड | ✆ (०७१२) २७३४३५४ |
| कटक-७५३००९ | भरतिया टावर्स, बादाम बाड़ी | ✆ (०६७१) २३३५४८१ |
| रायपुर-४९२००९ | मित्तल कॉम्प्लेक्स, गंजपारा, तेलघानी चौक | ✆ (०७७१) ४०३४४३० |
| वाराणसी-२२१००१ | ५९/९, नीचीबाग | ✆ (०५४२) २४१३५५१ |
| हरिद्वार-२४९४०१ | सब्जीमण्डी, मोतीबाजार | ✆ (०१३३४) २२२६५७ |
| ऋषिकेश-२४९३०४ | गीताभवन, पो० स्वर्गाश्रम e-mail:gitabhawan@gitapress.org | ✆ (०१३५) २४३०१२२, २४३२७९२ |
| कोयम्बटूर-६४१०१८ | गीताप्रेस मैंशन, ८/१ एम, रेसकोर्स | ✆ (०४२२) ३२०२५२१ |
| बेंगलोर-५६००२७ | १५, फोर्थ 'इ' क्रास, के० एस० गार्डेन, लालबाग रोड | ✆ (०८०) २२९५५१९०, ३२४०८१२४ |

**स्टेशन-स्टाल—** दिल्ली (प्लेटफार्म नं० १२); नयी दिल्ली (नं० १२-१३); हजरत निजामुद्दीन [दिल्ली] (नं० ४-५); कोटा [राजस्थान] (नं० १); बीकानेर (नं० १); गोरखपुर (नं० १); कानपुर (नं० १); लखनऊ [एन० ई० रेलवे]; वाराणसी (नं० ४-५); मुगलसराय (नं० ३-४); हरिद्वार (नं० १); पटना (मुख्य प्रवेशद्वार); राँची (नं० १); धनबाद (नं० २-३); मुजफ्फरपुर (नं० १); समस्तीपुर (नं० २); हावड़ा (नं० ५ तथा १८ दोनोंपर); कोलकाता (नं० १); सियालदा मेन (नं० ८); आसनसोल (नं० ५); कटक (नं० १); भुवनेश्वर (नं० १); औरंगाबाद [महाराष्ट्र] (नं० १); अहमदाबाद (नं० २-३); सिकन्दराबाद [आं० प्र०] (नं० १); गुवाहाटी (नं० १); खड़गपुर (नं० १-२); रायपुर [छत्तीसगढ़] (नं० १); बेंगलोर (नं० १); यशवन्तपुर (नं० ६); श्री सत्यसाईं प्रशान्ति निलयम् [दक्षिण-मध्य रेलवे] (नं० १) एवं अन्तर्राज्यीय बस-अड्डा, दिल्ली।

## फुटकर पुस्तक-दूकानें

| | |
|---|---|
| चूरू-३३१००१ | ऋषिकुल ब्रह्मचर्याश्रम, पुरानी सड़क ✆ (०१५६२) २५२६७४ |
| ऋषिकेश-२४९१९२ | मुनिकी रेती |
| तिरुपति-५१७५०४ | शॉप नं० ५६, टी० टी० डी० मिनी शॉपिंग कॉम्प्लेक्स, तिरुमलाई हिल्स |
| बेरहामपुर-७४२१०१ | म्युनिसिपल मार्केट काम्प्लेक्स, ब्लाक-बी, शॉप नं० ५७—६०, प्रथम तल, के० एन० रोड (मुर्शिदाबाद) |

ISBN 81-293-1349-9

Code 1623